॥ निर्वाणमञ्जरी ॥

अहं नामरो नैव मर्त्यो न दैत्यो
न गन्धर्वयक्षः पिशाचप्रभेदः ।
पुमान्नैव न स्त्री तथा नैव षण्डः
प्रकृष्टः प्रकाशस्वरूपः शिवोऽहम् ॥ १॥

अहं नैव बालो युवा नैव वृद्धो
न वर्णी न च ब्रह्मचारी गृहस्थः ।
वनस्थोऽपि नाहं न संन्यस्तधर्मा
जगज्जन्मनाशैकहेतुः शिवोऽहम् ॥ ३॥

अहं नैव मेयस्तिरोभूतमाया
तथैवेक्षितुं मां पृथङ्नास्त्युपायः ।
समाश्लिष्टकायत्रयोऽप्यद्वितीयः
सदातीन्द्रियः सर्वरूपः शिवोऽहम् ॥ ३॥

अहं नैव मन्ता न गन्ता न वक्ता
न कर्ता न भोक्ता न मुक्ताश्रमस्थः ।
यथाहं मनोवृत्तिभेदस्वरूप-
स्तथा सर्ववृत्तिप्रदीपः शिवोऽहम् ॥ ४॥

न मे लोकयात्राप्रवाहप्रवृत्ति-
र्न मे बन्धबुद्ध्या दुरीहानिवृत्तिः ।
प्रवृत्तिर्निवृत्त्यास्य चित्तस्य वृत्ति-
र्यतस्तन्वहं तत्स्वरूपः शिवोऽहम् ॥ ५॥

निदानं यदज्ञानकार्यस्य कार्यं
विना यस्य सत्त्वं स्वतो नैव भाति ।
यदाद्यन्तमध्यान्तरालान्तराल-
प्रकाशात्मकं स्यात्तदेवाहमस्मि ॥ ६॥

यतोऽहं न बुद्धिर्न मे कार्यसिद्धि-
र्यतो नाहमङ्गं न मे लिङ्गभङ्गम् ।
हृदाकाशवर्ती गताङ्गत्रयार्तिः
सदा सच्चिदानन्दमूर्तिः शिवोऽहम् ॥ ७॥

यदासीद्विलासाद्विकारं जगद्य-

द्विकराश्रयं नाद्वितीयत्वतः स्यात् ।
मनोबुद्धिचित्ताहमाकारवृत्ति-
प्रवृत्तिर्यतः स्यात्तदेवाहमस्मि ॥ ८॥

यदन्तर्बहिर्व्यापकं नित्यशुद्धं
यदेकं सदा सच्चिदानन्दकन्दम् ।
यतः स्थूलसूक्ष्मप्रपञ्चस्य भानं
यतस्तत्प्रसूतिस्तदेवाहमस्मि ॥ ९॥

यदर्केन्दुविद्युत्प्रभाजालमाला-
विलासास्पदं यत्स्वभेदादिशून्यम् ।
समस्तं जगद्यस्य पादात्मकं स्या-
द्यतः शक्तिभानं तदेवाहमस्मि ॥ १०॥

यतः कालमृत्युर्बिभेति प्रकामं
यतश्चित्तबुद्धीन्द्रियाणां विलासः ।
हरिब्रह्मरुद्रेन्द्रचन्द्रादिनाम-
प्रकाशो यतः स्यात्तदेवाहमस्मि ॥ ११॥

यदाकाशवत्सर्वगं शान्तरूपं
परं ज्योतिराकारशून्यं वरेण्यम् ।
यदाद्यन्तशून्यं परं शङ्कराख्यं
यदन्तर्विभाव्यं तदेवाहमस्मि ॥ १२॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य
श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छङ्करभगवतः कृतौ
निर्वाणमञ्जरी सम्पूर्णा ॥